# KOUṆḌINYA PRAHASANA

(A Comic Play in Two Acts)

BY

Y. MAHALINGA SASTRI, B.A., B.L.,

Advocate, Mylapore, Madras.

1930

 [*Price Eight annas.*

## PREFACE.

Sanskrit literature is rich in its store of tragi-comedies and lyrical love-dramas, which for ages have been our favourites both in the study and upon the stage. I am not aware of any instances of the Sanskrit Prahasanas having been accorded a similar recognition. But Prahasanas too have a meaning in life as much as the more serious types among the Rūpakas. The significance of the present one for us consists in the presentation in it of Appetite as the root-cause of the friction between the two classes of men—the owner and the trespasser. Appetite, metaphorically, stands for all the indomitable animal cravings in man.

Trivial, indeed, is the incident of this Prahasana, but it is conceived symbolically. Life is a deep dark game and if represented in the magnitude of its seriousness will lend itself only to a tragedy. A comic writer has unwittingly digested the poison and smiles in innocent composure.

This work was done to order and was intended to be staged on a specified occasion. Though eventually the original purpose was not given effect to by those concerned, my thanks are due to Mr. V. Raghavan, Sanskrit Honours Student of the Presidency College, for his having given this turn to my literary endeavours.

I am much obliged to the learned Editor of the Udyāna Patrikā for his having published this piece first in his journal.

I shall be glad to give the necessary permission to any of my readers who may be desirous of trying this play upon the stage.

MYLAPORE,
*24th February*, 1930.

Y. MAHALINGA SASTRI.

On Kouṇḍinya Prahasana—

एतल्लेखनेन प्रकटितनैसर्गिककवनसंस्कारविशेषोऽयं शास्त्रिमहाशयो नात्यन्तमिदानीं कवयो न सन्तीति प्रदर्शयन् अस्माकं हृदयाश्वासं सम्पादयति ... .... .... .... ... .... .... न केवलं शब्दरचनायां न केवलमर्थघटनायां न केवलं विवक्षितार्थप्रतिपादनसमर्थपदप्रयोगे, अपि तु रसविशेषमङ्गिनं कृत्वा तत्र सर्वदा निहितदृष्टिः असंबन्धिलेशमप्यस्पृशन् समुचितालङ्कारविन्यासेनेष्टमर्थं झटित्याविर्भावयन् रूपकविशेषनिर्माणेऽपि प्रगल्भते । .... .... .... अस्य कवेः प्रतिभा संविधानशक्तिश्च कस्य सहृदयस्य नाह्लादाय भविष्यति ॥

—The Udyāna Patrikā Editorial

॥ श्रीः ॥

श्रीमन्महालिङ्गप्रणीतं

# कौण्डिन्यप्रहसनम् ॥

मृद्वी धृताऽधरपुटे लघुपीडनेन
श्च्योतन्निरन्तररसा रसकोविदानाम् ।
वर्णप्रकर्षविलसद्बहलोर्मिकाढ्या
युष्मान् धिनोतु कविता मधुशष्कुलीव ॥

नान्द्यन्ते

सूत्रधारः—अद्य किल शरच्चन्द्रिकया प्रहसिते दिगन्तराळे, समन्ताद्भुवःस्थलेऽपि, पलितजर्जरशरकन्दलीताण्डवाडम्बरमिवोपहसन्तीषूत्फुल्लवदनासूत्पलिनीषु, देशकालानुरोधः कर्तव्य इति सामाजिकाराधनायाभिनवं कौण्डिन्यनामाङ्कितं प्रहसनं प्रयोक्तुमुद्युक्तोऽस्मि । अस्य च रचयिता—

कुले महत्यप्पयदीक्षितानां
श्रीत्यागराजाध्वरिणां प्रपौत्रः ।
विपश्चितो यज्ञकवेस्तनूजः
श्रीमान्महालिङ्ग इति प्रतीतः ॥ २ ॥

अत्र हि प्रथमं जिह्मलागृध्रनासयोः प्रवेशः ।

नेपथ्ये

प्रिये जिह्मले,

सूत्रधारः— कथमुपक्रान्तमेव वस्तु कुशीलवैः । तदहमप्यनन्तरकरणीयाय सज्जीभवामि ।

(इति निष्क्रान्तः ।)

॥ प्रस्तावना ॥

ततः प्रविशति जिह्मलयाऽन्वास्यमानो गृध्रनासः ।

गृध्रनासः—प्रिये जिह्मले अद्य द्वादशीति कल्य एव निर्वर्तितपारणस्य मे किमप्यपराह्णाशनं कल्पयितुमर्हसि ।

जिह्मला —नाथ , एवमेव ममापि मनसि स्थितम् । तद्ब्रूहि

पिष्टापूपं मोदकं माषपूपं
सक्तुं स्वीयं लड्डुकं शष्कुलीं वा ।
पौलिं फेणीं शर्करान्नं करम्भं
स्वाद्यं खाद्यं किन्नु ते कल्पयामि ॥ ३ ॥

गृध्रनासः—प्रिये, उपस्थिते भक्ष्यवर्गे अन्यतमस्वीकरणं नाम बहुपत्नीकस्येव दक्षिणनायकस्य महत् बहुमानसंकटं जिह्वाशालिनाम् ।

तथाऽपीयमस्तु परिच्छेदपद्धतिः ।

माषापूपः सुहृदिव शठः क्लेशदायी विपाके
साधारण्यात् परिचित इवानादरस्सक्तुपिष्टे ।
अस्त्युद्वेगो मधुरविकृतिष्वाप्तवाक्येषु यद्वत्
सेवाक्लेशो रसविधुरता शष्कुलीदुष्प्रबन्धे ॥ ४ ॥

प्रिये जानासि खलु भगवतो द्वारकानाथस्येव मे पक्षपातं पृथुकेषु।

जिह्मला— अथ किम् ।

गृध्रनासः— तेन हि—

घृतभृष्टमुपेतनारिकेलं
छुरितैलं मधुगोस्तनीफलाढ्यम् ।
पृथुलोचनि कल्पयाशु मह्यं
पृथुकान्नं गुडपाकसंप्रक्लृप्तम् ॥ ५ ॥

अथ वा मरीचचिपिटं
घृतभृष्टं कषितनारिकेलयुतम् ।
मिथ्यारोषस्फुरित-
त्वदधरमृदुलोपखण्डयमुपधेहि ॥ ६ ॥

जिह्मला— गौडमेव चिपिटपाकं संविधास्यामि । न तु मरीचकृतं, यमुद्दिश्यासंबद्धं किमप्येवं वर्णयति भवान् ।

(इति बैलक्ष्यं नाटयति । )

गृध्रनासः — प्रिये, मर्षय मर्षय ।

अथवा मरीचचिपिटो
विश्राम्यतु, किं प्रजल्पितं नु मया ।
मिथ्यारोषस्फुरित
त्वदधरमृदुता कुतो वराकस्य ॥ ७ ॥

(इत्यधरग्रहणमिच्छति)

जिह्मला — (मुखमपनयन्ती) नाथ विपणिं गत्वा द्राक्षैलादिकं कः क्रेष्य-तीतिभवतोऽध्यवसायः । अद्य कर्मकर्यपि किलास्वास्थ्यमप-दिश्य विश्राम्यति ।

गृध्रनासः — अयि, सुमुखि, किमहमन्यत्करोमि । एष प्रस्थित एवास्मि विपणिम् । अपिच नान्यस्मिञ्जनेऽवरोपायितुं शक्यो गुप्तानिर्वा-ह्योऽसौ नियोगः येनास्मदारम्भमधिकृत्य परपिण्डलोलुपस्य कौण्डिन्य ब्रह्मचारिहतकस्य दूराद् गन्धोपलब्धेरप्यवकाशो न दातव्यः । स चेदस्मद्विपणिमार्गगतागतेन पाकविशेषं परि-शङ्कते, पक्षद्वार एव प्रायोपवेशं करिष्यति धृष्टः । ततश्च, कदलीविक्रेतुरापणान्तरे प्रवेशितमुखस्येव चत्वरवृषभस्य तस्य व्युदसनं न सुकरम् । न चापि पारयिष्यावस्तमभितर्प-यितुम् । यद्वाडवमग्निमुदरे बिभ्रत् स सर्वाशी उपकल्पयि-तॄणामंशलेशमप्यवशेष्यमाणं नक्षमते। नाहं नातिथिप्रियः;किन्तु,

नित्यं परान्नलोलाय निर्व्यापारेण तिष्ठते ।
न दद्याद्ग्रासमन्नं वा द्विजायाप्यलसात्मने ॥ ८ ॥

इत्यभिरूपोपदेशः । तद्युक्त्या केदारपर्यटनायेव निर्गत्य नटराजश्रेष्ठिन आपणे क्रेतव्यं क्रीत्वा त्वरितं निवर्तिष्ये । त्वमपि तावत् सावधाना भव ।

(इति प्रस्थितः ।)

जिह्मला — इदमर्गलितं कवाटम् । (इत्युभौ निष्क्रान्तौ ।)

॥ प्रथमोऽङ्कः ॥

ततः प्रविशति कौण्डिन्यः ।

कौण्डिन्यः — अहो परान्नभोजनं नाम स्वर्गभोगो मनुष्याणाम् । आतिथ्यसूत्रकारैर्नूनं चिन्तारत्नमस्मद्धस्तगतं विहितम् ।

तथाहि,

कुतस्सम्भारचिन्ता मे कुतो मे पाकसंभ्रमः ।
देशकालविदा पात्रेसमितेनैव भूयते ॥ ९ ॥

काममविगीतेयमीदृशी परान्ननियमचर्या । यतः—

नार्थसंग्रहणे लोभो नेर्ष्या स्फीतेषु गेहिषु ।
न स्वीयं न पराधीनमातिथ्ये केवले स्थितिः ॥ १० ॥

अपि च, स्वगृहे नित्यमश्नन्तप्रज्वलनविरामकरणापरपर्याया परान्ननिष्ठता नामेयं व्रतचर्या प्रायो दुश्चराऽवशीकृतेन्द्रियाणाम् । यतः—

घटेत चेत् द्वित्रदिनाशनग्रहः
करिष्यते किन्न सकृन्निपादिना ।
अथान्तरा निष्करुणो यदा विधि-
र्न दुष्करं द्वित्रदिनान्युपोषणम् ॥ ११ ॥

परम्परागतः खल्वयं धर्मो मामद्यानुवर्तते । कुतः कुलधर्मेऽस्वरसतानाम श्रेयस्कामस्य । तथा च मात्पितृव्यो वटिकानाथमिश्रः कस्य नामून्मान्यगुणः ।

कृत्वा पणं हि वटिकाशतभक्षणाय
पूर्णे नवाधिकनवत्यशनेऽथ यस्य ।
उद्गीर्णलोचनयुगस्य पुरा मुमूर्षोः
शिष्टैकसंग्रहरुचिं कृतिनः स्मरन्ति ॥ १२ ॥

(सास्रं)महान्तः खल्वारोहन्त्युग्राण्येव व्रतानि । उपारूढाश्च प्राणपरित्यागेनापि व्रतनिर्वहणपरा भवन्तीत्येतदनुमतमेव विपश्चिद्गोष्ठीषु । निन्दन्तु नाम स्वल्पज्ञाः । नास्माकं किंचित्परिहीयते । तथाहि--

भिक्षोपजीवितायाः-
मिन्दुवतंसं वयं हि भगवन्तम् ।
अमिताशित्वे देवं
प्रमाणयामश्च हेरम्बम् ॥ १३ ॥

प्रायेण कदर्या एवोदरशूलिनः परान्नभोजिनामपवादनिरता जन्मवैरिणः । (विलोक्य) अये कदर्थस्मरणक्षण एव प्रत्यक्षीभवन्नेष गृध्रनासस्तत्र प्रथमोदाहरणभूतमात्मानं स्मारयतीव मे । अथ किन्नु खल्वसौ मद्दर्शनं परिहरन्निव त्वरितत्वरितं विपणिमार्गे परिक्रामति । अथवा किमन्यत् ।

धर्मध्वजो व्याजविवर्जितेभ्यः
कृतोपकाराच्च कृतघ्नबुद्धिः ।
ऋणी परित्रस्यति चोत्तमर्णात्
सदा कदर्यः स्वगृहेऽतिथिभ्यः ॥ १४ ॥

गृध्रनासो हि नित्यं स्वादुकामः । जिह्मला च विविधभक्ष्यविधानदक्षा । तत्किमद्य मोदकानारभते, उत शिखरिणीं राध्नाति, आहोस्विल्लड्डुकान् भावयति, अथवा पौलिं निष्पादयति, उताहो वटिकाशष्कुली--प्रमुखं लावणं संविधानविशेषं विदधाति । अये एष नटराजश्रेष्ठिन आपणालिन्दादवरुह्य इतोऽभिमुख इव प्रस्थितः केन चित् प्रतिघातेनेव पुनर्निवृत्य कैदारिकनिवेशस्य पन्थानमनुसरति । तेन हि मृगयुना मया समुपलब्धः श्वापदगन्धः । प्रशस्तेनाद्य जिह्मलया समारब्धेन लब्धवशनेन भवितव्यम् । यावदतिथिपरिपन्थिनोऽस्याग्रत एव गृहद्वारे सन्निहितो भवामि । (इति परिक्रामति)

इदं गृध्रनासस्य गृहम् । अये सुघटितः कवाटो दृश्यते । अतिथिभीरवः किल कदर्याः कवाटगवाक्षादिकं मुद्रयन्ति । भवतु तावत् अलिन्दनिविष्ट एव प्रतिपालयामि प्रत्यागमिष्यन्तं

गृहस्वामिनम् । अहो सुस्निग्धता जिह्मलाकरप्रमार्जनाविहित-शोभस्यालिन्दप्रदेशस्य । उग्रातपायामस्यां वेळायां सुलभा खलु सुशीतले प्रच्छायतले निद्रालुताऽस्मादृशानाम् । तत्कथं नि-द्राजाड्यमपनुदामि । अथवा गास्यामि तावत् ।

—चिन्ता नास्ति किल—तेषां—चिन्ता नास्ति किल ।

परगृहभोजनपरितुष्टानां
नित्यातिथ्योत्सव-निष्ठानाम् ।
कालत्रयाविरतोद्योगानां
किं च समेतामितभोगानाम् ।
गृहमेधिनिमन्त्रणचित्तानां
षड्रसभरिताशनमत्तानाम् ॥ १५ ॥

(ततः प्रविशत्यन्तर्गृहे पाककर्मव्यग्रा जिह्मला)

जिह्मला— निर्वृत्तप्रायः पाकः । कुतश्चिरयति नाथो द्राक्षैलादिकमुपनेतुं । अहो गुडचिपिटपाको नाम देवतानामेव योग्योऽभ्यवहारः । क-थं गीतशब्द इव । आः, ज्ञातम् । स खलु, गृहद्वारि चत्वरर्ष-भः क्षुधार्तो घुर्घुरायते । (दृष्ट्वा) दिष्ट्या, पश्चिमकोष्ठद्वारेणैव प्रविशति नाथः ।

(यथोक्तं प्रविश्य)

गृध्रनासः—प्रिये गृहाणैतत्सर्वं । स खलु पिचण्डपिशाचो गृहमेधिजनब्र-ह्मराक्षसोऽलिन्दे सुखोपाविष्टो गायन्नास्ते । तद्दूरादेवावगत्य पश्चिमकोष्ठद्वारेण प्रविष्टोऽसि । निर्वर्तयाविलम्बेन चिपिटम् । यावद्भुक्तलघ्वशन एव कपाटमपावृणोमि ।

जिह्मला— नाथ प्रागेव सज्जम् सर्वं । द्राक्षैलामिश्रणमात्रमवशिष्यते । (इति द्राक्षैलादिकं मिश्रयति) । नाथ इदं निर्वृत्तम् । किन्त्वतितप्तं वर्तते । यावत्तद्बाष्पं निर्वाणं भवति तावत्प्रतिपालय ।

कौण्डिन्यः—अये एलागन्धः समुच्चरति ।

तज्जिह्मलाप्रस्तुतमस्ति किंचि-
न्नूनं गृहान्तर्गुडसंविधानम् ।
जिह्वावाजुषामीदृशसंशयेषु
किल प्रमाणं रसना जलार्द्रा ॥ १६ ॥

अन्तरालाप इव श्रूयते । तत्किमेष वृद्धशृगालो मां वञ्चयित्वा पश्चिमकोष्ठद्वारेण गृहं प्रविष्टः । किं कौण्डिन्योऽप्येवं वञ्च्यते । यज्ञभागमिव महेश्वरस्य नित्यभिक्षोर्ममोपायनभागं निषेद्धुं कः प्रभविष्यति । तद्गृहस्य पृष्ठतो गत्वा परीक्षिष्ये । (इति परिक्रम्य) दिष्ट्या मयि प्रसन्नस्येव देवस्य हृदयं सिद्धिमार्गो ममोद्घाटितो वर्तते । यावत्प्रविशामि ।

द्वारं क्वचित्क्वापि गृहस्य भित्तिः
क्वाप्यर्धचन्द्रः क्वचिदुग्रवाचः ।
परान्नचित्तैः कृपणोपरोधा
उल्लंघनीया हि भवन्ति नित्यम् ॥ १७ ॥

(इति प्रविशति)

जिह्मला — न किल सन्दानितं मूढया मया पश्चिमकोष्ठद्वारम् । एषा निमेषमात्रेणागच्छामि । (इति परिक्रामति)

गृध्रनासः — अहो कियच्चिरमेतन्न निर्वाणं भवति । अद्यापि धूमायमानमेव वर्तते ।

जिह्मला — (दृष्ट्वा) हा धिक् मुषितौ स्वः । (इति सपलायनं निवृत्य) एष चोर इव पश्चिमद्वारेणैव प्रविशति निर्लज्जः । नाथ का गतिरधुना । [इति रोदिति]

गृध्रनासः — हा किं प्रविष्टस्स हतकः । एष निरवशिष्टपुलाकं करोमि कांस्यकन्दुम् । [इत्यङ्गुलिदाहं दहन्तमपि चिपिटस्तोमं मुखे प्रक्षिपन्नसह्यवेदनतया हाहा कुर्वन् सीदति ।)

जिह्मला — हा नाथ किं त्वया कृतम् । हा मत्प्राणवल्लभ अनाहूतप्रविष्टैः श्वभिरिव परचर्वणलोलुपैरसज्जनैस्ते कियदत्याहितमुपनिपात्यते ।

उद्गलत इव ते अक्षिणी । स्फुटत इव गण्डपिण्डौ । अयि नाथ ईदृशीमवस्थां गतोऽसि । [इति रुदती मुखे फूत्कुर्वती पटाञ्चलेनावृत्य वीजयति]

कौण्डिन्यः—(उपसृत्य) भद्रे किमेतत् । कथं सहसैवेदृशं संवृत्तम् ।

जिह्मला— हा मज्जीवितेश्वर किं मां न प्रतिभाषसे । प्रणष्टे त्वयि कथमेकाकिनी प्राणान् धारयिष्यामि ।

कौण्डिन्यः—भद्रे, अत्र प्रतीकारं निरूपयामः । ब्रूहि तावत् किं वृत्तमिति । अलं सन्तप्य ।

जिह्मला— अहो, महाब्राह्मण, एवमनाथाऽस्मि खलु संवृत्ता ।

[इति तारं रोदिति]

कौण्डिन्यः—भवति, सनाथा भविष्यसि । मा शुचः । गृहस्वामी चायं न केवलं तव किंतु मादृशानामपि श्लाघ्यौदार्यगुणैरातिथ्यकरणवैशल्येन च नित्यं प्रेयानास्ते । तद्विस्रब्धं ब्रूहि कीदृशोऽयं विकारः कथमिदानीमियमुल्वणेतति । चिन्तयामः प्रतीकारम् ।

जिह्मला— महाब्राह्मण, अद्य कति दिवसानि मे प्राणेश्वरस्य कपोलगण्डोल्वणमस्वास्थ्यमनुभवतः । किमजानन्निव पृच्छसि । उत्कुपितश्चायं ज्वरवेगो दवाग्नाविव चण्डमारुतः प्रवर्तते । अद्य मे कृतान्तहतकः सौमङ्गल्यतन्तुविलोटनाय नूनमुत्सहते । इतःपरं न कोऽपि मे बन्धुर्भवति लोकेऽस्मिन् । (इति निस्सहं रोदिति)

कौण्डिन्यः—नैष्ठिकब्रह्मचारिणो मे वचनेन ते लोकेऽस्मिन् बन्धूनामविच्छेदो भविष्यति । किं तु कतिपयदिनैरस्वस्थं ते गृहस्वामिनं कथं भणसि । मुहूर्तादर्वागेवासौ दृढकल्यशरीरो विपणिगोचरोऽभूत् ।

जिह्मला— बाढं महाब्राह्मण बाढम् । अपुरुषसहायतया स्वयमेव गण्डचिकित्साहेतोर्भिषजमन्विष्यन् यावन्निर्गतस्तावदुल्बणीभूतवेदनः क्रन्दन्नुपेत्य निपतित ईदृशीमवस्थामनुभवति । तदनुकम्प्य नौ वैद्यमानयतु भवान् शीघ्रम् । पुण्यं ते भविष्यति ।

कौण्डिन्यः—अवश्यमानयामि भद्रे । मा भैषीः । किन्तु उल्बणारम्भा इव दृश्यमाना व्याधयः कदाचिद्भ्रान्तिमूलका एवानुपदं निरूप्यन्ते । तदपनयतु भवती अंशुकाच्छादनम् । पश्याम्यामयविशेषस्य स्वरूपम् । न च न जानामि भैषज्यम् ।

जिह्मला —अहह किं मुधा विलम्बकरणेन । न पश्यसि सिमासिमायमानान्यङ्गानि । न शृणोषि च कण्ठे घर्घरितम् । हा नाथ एवं मन्दभागिनीं मां परित्यज्य क्व यासि । (इति परिष्वज्य रुदती) कुशलिनं त्वां चर्वितुमभिपतन्त्यर्थिनो नानारूपाः । मुमूर्षुं त्वामधिगत्य तु वैद्यानयनायापि न त्वरन्ते । निर्घृणः खलु लोकः ।

कौण्डिन्यः —अवितथमाह भवती । एवं निर्घृणो लोकः यो गृध्र इव मृतमपि परं नासिकया सर्वकालं विदारयन् मृत्युमपि स्वयं वृणुयात् । न तु परस्येषत्करां प्रीतिं विदध्यात् ।

जिह्मला —अयि निष्ठुर, कथं मुधा वितण्डां पल्लवयसि । शापितोऽस्यस्य मे प्राणेश्वरस्य निर्जिगमिषुभिः प्राणैः यदि न सद्यो निर्गत्य वैद्यमानयसि ।

कौण्डिन्यः—भवति, मा भूत्ते मय्युपतापः । एष क्षणादेवानयामि भिषजम् । (स्वगतं) अहो, जम्भलीसुतायाः सामर्थ्यसारः । (इति परिक्रम्य मुखद्वारमुद्धाट्य देहल्यन्तर एव कुसूलपार्श्वे निलीयते ।) कथंकारं कौण्डिन्योऽप्युपात्तभक्ष्यगन्धो वञ्च्यते । दृष्टः खलु मया गृध्रचक्षुषा अनयोः कृपणदम्पत्योः पार्श्वे उपरिक्षिप्तांशुकनिगूहितः कांस्यकन्दुः । भवति समये पुनरात्मानमाविष्करोमि ।

जिह्मला —[अंशुकमाक्षिप्य] नाथ,

गृध्रनासः—प्रिये, किं गतः स हतकः (इत्यक्षिणी उन्मील्योत्तिष्ठति)

जिह्मला— अथ किम् । कृच्छ्रेण खलु निर्जितो मया । यत्पुरुषा बलात्कारेण तत्स्त्रियो ललिततरं साहसेनैव साधयन्ति ।

गृध्रनासः—अयि मायाकरण्डिके दृष्टस्ते साहसविक्रमः । अनुभूतश्च ब्रह्मचारिसाक्षिकं ते दिवा स्वयं कण्ठग्रहालिङ्गनप्रणयः ।

जिह्मला— आस्तामेतत् । अयि नाथ, कथं पश्यसि मद्रुदितप्रलपितान्यन्तरेण ।

गृध्रनासः—किमुच्यते । एतादृशानि स्वच्छन्दप्रेमाविष्करणान्यनुभावितुं, स्वास्थ्यदशादुर्लभानि प्रणयसंबोधनानीदृशानि श्रोतुं च, यत्सत्यमलीकमरणसहस्रेणापि मे हृदयपरिपूर्तिर्न भविष्यति । अपि च दयिते, कथं पश्यसि मे गण्डदाहव्याजस्यातिशयप्रदर्शनसाहसमन्तरेण ।

जिह्मला— नाथ, यद्यपि गण्डदाहिना पृथुकेन समीचीनमुपक्रान्तं तथापि नितरां दुर्जनायितं वेदनाप्रदेन तेनेति गाढमुत्कंपितं मे हृदयम् । एहि, व्यादेहि तावन्मुखम् ।

गृध्रनासः—प्रिये, यत्किञ्चिदेतत् । तेन हि स दुष्टब्रह्मचारी भिषजा सह यावन्न प्रतिनिवर्तते तावत्परिवेषय मे गुडपृथुकमद्य निर्वाणप्रायम् ।

जिह्मला—[स्मृत्वा] तेन हि प्रथमं उभे अपि गृहद्वारे दृढसन्दानिते करोमि । [पश्चिमकोष्ठद्वारं पिधाय, ततो मुखद्वारं च घटयित्वा सरभसं निवृत्य गृध्रनासस्य कर्णे] एवमिव ।

कौण्डिन्यः—किमेषा दुश्चारिणी मामुपलब्धवती ।

गृध्रनास :—[क्रोधेन दन्तान् कटकटाकृत्य] आः पापोऽयं ब्रह्मराक्षस इव निरन्तरं मामनुबध्नाति । मूर्तादिव महाविघ्नादस्मात् कथंकारमहं विमोक्ष्ये ।

जिह्मला— नाथ, मा तावदाक्रोश । युक्त्यैवायं निर्वास्यो धृष्टः । बलात्कारोपक्रमे महान्तो दोषा भविष्यन्ति । मम त्वेवं प्रतिभाति ।

गृध्रनासः— प्रिये, किं हठप्रविष्टोऽयमौदरिको हठमन्तरेण निष्काल्यते । कालत्रयेऽप्येवमेवोद्वेगप्रदममुमेकेनैव मुसलप्रहारेण ग्रीष्मोद्रिक्तोन्मादमिव श्वानं निवृत्तैहिकं विधास्यामि । [इत्युत्थातुमिच्छति]।

जिह्मला— नाथ, क्रोधिनः खलु प्रायः पश्चात्तापैकशरणा भवन्ति । अलं संभ्रमेण । अत्र छलमेवोपाश्रित्य यथाचिन्तितं साधयन्ननपराद्धो भविष्यसि ग्रामसामाजिकानाम् ।

गृध्रनासः —कीदृशं छलम् ।

जिह्मला —त्वया किल ब्रह्मराक्षस इवायमनुबध्नातीति भणितम् । स ब्रह्मराक्षस एव भवतु ।

गृध्रनासः —स पिप्पलाधिष्ठानः ।

जिह्मला —अथ किम् ।

गृध्रनासः —प्रिये, पण्डिता खल्वसि । तेन हि तत्र प्रस्तूयतामुपोद्घातः ।

कौण्डिन्यः —किमेतौ चिरं मन्त्रयतः । न च पृथुकभक्षणाय सज्जतः । कथमेतत् ।

जिह्मला —[उच्चैः स्वरेण] नाथ, नाथ, परित्रायस्व मां, परित्रायस्व माम् । कथमेवमेवेति निश्चयः ।

कौण्डिन्यः —महामायेयं कतमं पुनर्मिथ्याप्रपञ्चमुपदर्शयितुमाहोपुरुषिकामुररीकरोति सांप्रतम् ।

गृध्रनासः —[उच्चैः] प्रिये, अनुचिन्तनेन मे संशयच्छेदो जातः ।

योऽभूद्देवकुलाग्रपिप्पलतरौ तिष्ठन् जनत्रासकृत्
कृच्छ्रेणाथ च मन्त्रतन्त्रविधिभिस्तस्मात्किलोज्जासितः ।
एतैरेव दिनैः श्रुतो न किमसावाहिण्डमानो गृहान्
मध्याह्नेऽतिकठोरतापविसरे काष्ठामगृह्णन् क्वचित् ॥ १८ ॥

जिह्मला —नाथ, एवमेवैतत् । इदानीं खलु स्मरामि मत्प्रातिवेशिन्या दन्तुरया कथितम् । ह्यः किल स ब्रह्मराक्षसः ब्रह्मचारिरूपेण कठोरेऽह्नि एकाकिनीं दन्तुरामुपेत्य भिक्षामयाचत ।

गृध्रनासः —अपि सत्यम् । ततस्ततः ।

जिह्मला —सत्यम् । तयैव मे प्रातरद्य कृतसंभाषणया कथितम् । ततश्च यावत्सा विरुवती पर्यधावत् तावत्तस्याः पतिः-

गृध्रनासः—ग्रन्थिलमिश्रः ।

जिह्मला—सरभसं मुसलमादायाभ्यपतत् । ब्रह्मराक्षसस्तु कुसूलसंकटे देहलीकोणे न्यलीयत ।

गृध्रनासः —न तथापि व्यपेतः । अहो, महान् खल्वयमनर्थः । ततस्ततः ।

कौण्डिन्यः—किमिमौ दुष्टदंपती मन्निर्गममनेन व्यपदेशेनोपदिशतः । अनिर्गच्छति च मयि मुसलप्रयोगं चिन्तयत इति तर्कयामि ।

जिह्मला —[अपवार्य] नाथ, साधूक्तं त्वया यद्बलात्कारमन्तरेण निर्लज्ज एष न निष्कासयितुं शक्य इति । तदेवं भवतु । [ उच्चैः ] ततश्च दन्तुरापतिः मुसलमुद्यम्याभितोऽन्विष्यन् कुसूलकोणे जातशङ्कः प्रहारानसृजत् ।

गृध्रनासः —साधु भो ग्रन्थिलमिश्र साधु । एवं कृते स न पुनः प्रत्यावर्तिष्यते ।

जिह्मला —ततश्च स ब्रह्मराक्षसः अभयं मे दातुमर्हसि, शरणागतोऽस्मि, न पुनरनया दिशाऽपि चरिष्यामि, इति क्रन्दन् अनुमतो निष्क्रान्तः ।

गृध्रनासः —[उच्चैर्विहस्य] एवं शिक्षितोऽपि मूढः खलु चापलमयते । न जानाति तपस्वी ग्रन्थिलमिश्रादपि दृढतरप्रहारं प्रतिपक्षनिरनुक्रोशं मां गृध्रनासम् ।

कौण्डिन्यः—एवं विजितो ब्रह्मराक्षसः प्रतिवेशकेन । त्वमप्येनमद्य विजेष्यसे । अहो मूर्ख, गृध्रनास, स्त्रीबुद्धिं प्रमाणयंस्त्वमद्य उदासीनजनस्य घृणास्पदं भविष्यसि ।

जिह्मला —नाथ, न मे विश्वासस्स किल ब्रह्मराक्षसोऽस्मद्गृहात् अद्य निर्गत इति । कदाचिन्निलीनो वर्तते । स किल सर्वदा क्षुधार्तः आहारगन्धमुपलभ्य न कथंचनापयातीति श्रूयते ।

—अस्मिंश्चाशान्ते रणरणके कथमितः परं निर्भीका गृहाभ्यन्तरेऽपि गतागतानि कर्तुं पारयिष्यामि । सर्वथा हताऽस्मि यद्यत्रात्यान्तिकः कोऽपि प्रतीकारो न मृग्यते त्वया ।

गृध्रनासः —प्रिये मा भैषीः । एष मुसलहस्तो गृहाभ्यन्तरमन्वेषयामि । यदि सोऽस्मलब्धशनमहोपसर्ग उपलभ्यते तं मडमडाकरिष्यामि । (इति धीरं परिक्रामति)

कौण्डिन्यः—कथं गृध्रनासोऽप्योजायते । दिष्ट्या बुसपूर्णोऽयं कुसूलः । एष च शूर्पः । (शूर्पपूरं बुसमादाय सज्जस्तिष्ठति) ।

जिह्मला —नाथ, सावधानो भव । ब्रह्मराक्षसो बलपराक्रमवानिति किल वदन्ति । प्रथमं तावद्देहलीप्रदेशे कुसूलप्रान्तमेव परीक्षस्व । यदभ्यस्तविधिपरतन्त्राः प्राणिनः ।

गृध्रनासः —प्रिये, प्रत्यनन्तरीभव । (देहलीमुपसृत्य) अरे रे, नृशंस, अतिथिजनवञ्चनापातकलब्धदुर्जन्मदुर्भग, जन्मान्तरकदर्य, कुत्र भवसि । ब्रह्मराक्षसो जन्मराक्षसो वा भव । न तु पुनर्गृध्रनासात्परापतिष्यसि कथंचिदपि । (दृष्ट्वा) आः पाप, दृष्टोऽसि मया कृतान्तेन च । स्मरेदानीं ग्रान्थिलमिश्रस्य (इति प्रहर्तुमिच्छति)

कौण्डिन्यः—(गृध्रनासस्य मुखे बुसमवकीर्य) आदत्स्व त्वदौदार्यगुणतुच्छानेतान् बुसविसरान् ।

गृध्रनासः —हा धिक् हा धिक्, प्रिये अवलंबस्व माम् । हा हा हतोऽस्मि । (इति सफीट्कारं विरौति)

जिह्मला —हा नाथ, कथमात्तगन्धोऽसि पापिष्ठेन ब्रह्मरक्षसा । परित्रायध्वं परित्रायध्वं अशरणं मे नाथम् । (इत्याक्रोशन्ती समापतति)

कौण्डिन्यः —भोः गृध्रनासमिश्र, त्वं बुसं भक्षय । यावदहं गुडपृथुकं भ-

क्षयामि । समीचीनः खल्वयं दण्डः नित्याचारशुद्धं ब्रह्मचारिणं उपायनभागाद्वञ्चयितुकामस्य । (इत्युत्पत्य गुडपृथुकोपेतं कांस्यकन्दुमादाय भक्षयन्) भवति, किं गण्डपिण्डार्थे वैद्यमानयामि, उत चक्षुर्विशोधनार्थम् ।

जिह्मला —हा नाथ, कथं चक्षुषी ते समुच्छूने । कथं स्वगृह एव परपिण्डोपजीविना रथ्याकुक्कुरेणैवं परिभावितोऽसि । (कौण्डिन्यमुपधाव्य) त्रुट्यन्तु ते अङ्गुलयः । पततां ते भुजौ । निर्लज्ज, क्षिपैनं कन्दुम् ।

गृध्रनासः —(वेदनया सीत्कुर्वन्) प्रिये, नय मामन्तर्गृहम् । विधेहि प्रथमं मे नेत्रशोधनम् ।

जिह्मला —दुर्विधेः खल्वद्य नेत्रशोधनं विधेयम् । इयता प्रयासेन प्रक्लृप्तं पृथुकपाकं योऽस्मदाक्षिषु पांसु विकीर्य ध्वंसिष्यमाणस्य मर्कटमुखस्य ब्रह्मराक्षसहतकस्यास्य हस्ते समर्पितवान् ।

(इति गृध्रनासमन्तर्नयति)

कौण्डिन्यः —भवति, मा कुप्य, अतिथिजनवञ्चनापातकेनैव लब्धजन्मानो ब्रह्मराक्षसा इति सुष्ठु जानाति ते गृहस्वामी । तेन हि हठादमुं पृथुकमुपगृह्णता मया भाविनो ब्रह्मराक्षसजन्मनोऽयं मोचित इति मयि कृतज्ञा भवितुमर्हसि ।

जिह्मला —(दन्तान् कटकटाकुर्वती अङ्गुलिस्फोटैः शपन्ती च गृध्रनासेन सह निष्क्रान्ता) ।

कौण्डिन्यः —न केवलं गृध्रनासो ब्रह्मराक्षसः । जिह्मला च ब्रह्मराक्षस्येव । अहो, अनुरूपमनयोर्दाम्पत्यम् । [भुञ्जानः] अथवा जिह्मलाहस्तकौशलं नूनमभिनन्दनमर्हति । अहो गुडचिपिटपाकस्य मधुरता ।

तस्य लुब्धस्य दग्धौष्ठौ सुखोष्णोऽयं भवन्मम ।
दासस्यातिथ्यशास्त्रार्थपक्षपातमिव स्वकम् ॥ १९ ॥

वेक् खलु पापिष्ठं जन्म आतिथ्योद्विग्नानाम् ।

अग्निदेवपितॄणां हि ब्राह्मणा मुखमिष्यते ।
एकः स्वादु न भुञ्जीतेत्येवं गाथा च लौकिकी ॥ २० ॥

अथ कथंचित्कृतकृत्योऽस्मि । [इति कांस्यकन्दुं भूमौ निक्षिप्य]

तथापीदमस्तु (भरतवाक्यम् ।)

न वितरति बुभुक्षाक्षीणसत्त्वाय भिक्षां
यदि गृहमुपगम्योपात्तदीनाक्षराय ।
सुविहितमपि भक्तं तस्य लुब्धस्य वक्त्रं
प्रदहतु बुसकल्पं नीरसत्वं च यातु ॥ २१ ॥

[ इति निष्क्रान्तः ]

द्वितीयोऽङ्कः ॥

समाप्तं चेदं श्रीमन्महालिङ्गविरचितं कौण्डिन्यप्रहसनम् ॥

॥ श्रीः ॥

शुद्धाशुद्धपत्रिका ।

| Page. | Line. | For. | Read. |
|---|---|---|---|
| २ | २१ | पृथुलोचनि | कलभाषिणि |
| ५ | १६ | राघ्नाति | राघ्नोति |
| ६ | २१ | द्वोरण | द्वारेण |
| ७ | ३ | जिह्ववा | जिह्वा |
| | ४ | किल प्रमाणं | प्रमाणमाद्यं रसना किलार्द्रा |
| | ९ | देवस्य | दैवस्य |
| | १३ | रोघा | रोधा |
| ८ | २४ | तेर्भि | तोर्मि |
| ९ | ६ | वर्धरित | घर्घरित |

The "Srinivasa Press." Karugudi, TIRUVADI.

## NOTES.

Page.

1. वर्ण Colour; complexion; word or syllable; caste or race.

   ऊर्मिका Wave; finger-ring.

   मधुशष्कुली "Jilobi."

   शरकन्दली Flag-like shoots of reeds.

   आडम्बर Pride or arrogance; commencement.

2. कल्य n. Daybreak.

   पारणा Eating after a fast.

   अपराह्णाशन Tiffin.

   पूप and करम्भ—पूपोऽपूपः पिष्टकः स्यात्करम्भो दधिसक्तवः । Amara.

   विपाक Digestion; ripening or result.

   साधारण्यात् As it is ordinary or common-place.

   उद्वेगः Disgust or satiety.

   दुष्प्रबन्ध Bad compositions; a series of hard or knotty coils.

   घृतभृष्ट Roasted in ghee.

   छुरित Intermingled.

   मधुगोस्तनीफल Honeyed, dried grapes

   पृथुकान्न Cooked "Aval".

   मरीच Black-pepper.

   कषित Rubbed or scraped.

3. विश्राम्यतु Enough of it; leave it aside.

   वराक wretched.

विश्राम्यति Stops away from work.

नियोगः Commission or charge.

प्रायोपवेश Here means, "awaiting (to be fed) to the extremity of death."

धृष्टः Presumptuous; impudent; shameless.

4. पात्रेसमित Constant at meals.

चर्या Practice.

अश्मन्त Hearth.

अपरपर्याया Synonymous with.

सकृन्निषादिन् engaged at one sitting.

अन्तरा At intervals; now and then.

उपोषणम् Fasting.

पणः Bet or wager.

पुरामुमूर्षोः Likely to die in a short time.

शिष्टैकसंग्रहरुचि The desire to grasp at the one remaining cake.

5. उदरशूलिन् Suffering from colic in the belly.

धर्मध्वजः a religious hypocrite or imposter.

व्याज Pretence or deception.

उत्तमर्ण Creditor.

कदर्य Miser.

राध्नोति Pres. Sing. of राध् v. t., 5th conj. Parasmai Pada —to accomplish.

कैदारिकनिवेश The living quarters of peasants.

श्वापद A beast of prey.

लघ्वशन Light refreshments.

6. चिन्ता नास्ति किल A parody of the well-known song of Śrī Sadāśiva Bṛhmendra.

पश्चिमकोष्ठद्वार A door on the hind-wall.

7. तज्जिह्वला etc.—A parody of Kāḷidāsa's verse in the Śākuntala— असंशयं क्षत्रपरिग्रहक्षमा etc.

अर्धचन्द्रः a push at the neck with the half moon-shaped ridge of the hand.

उपरोध Obstruction; impediment.

पुलाक m. and n. Boiled rice. (Here, cooked unitary "Aval".)

कांस्यकन्दुः A frying basin made of bell-metal.

8. प्रतिकारः Remedy.

विकारः Sickness; ailment.

गण्ड The cheek; a boil.

दृढकल्य Strong and healthy.

9. भैषज्य Medical treatment.

मुधा to no purpose; uselessly.

वितण्डा Frivolous argument.

जम्भलीसुता Daughter of a whore (an abuse).

कथंकारं How; in what manner.

गृध्रचक्षुः One with greedy sharp eyes like the vulture.

10. अथ किम् Yes.

करण्डिका A small box made of bamboo. (Here, figuratively used.)

यत्किञ्चिदेतत् It is nothing (trivial) after all.

11. औदरिकः Gluttonous fellow.

निष्काल्यते Is driven out, (कल् with निस् 10th Conj. Ubhayapadi)—Pr. pass.

निवृत्तैहिकं etc. Shall make him bid farewell to his temporal concerns, *i.e.*, kill him.

पश्चात्ताप Remorse.

पण्डिता a clever woman.

आहोपुरुषिका Proud assumption of power.

उज्जासितः Made to depart from.

आहिण्डमानः Roaming about.

काष्ठामगृह्णन् क्वचित् Not taking quarter anywhere.

प्रतिवेशिनी Neighbour. (Woman)

12. कुसूलसंकटे etc. hid himself in a corner of the entrance hall narrow and congested because of a mud-built grain receptacle placed there.

उदासीनजनस्य etc. You are going to become an object of pity for indifferent on-lookers.

न मे विश्वासः I do not believe.

13. रणरणक (m. and n.) Fearful anxiety.

आत्यन्तिकः etc. Some absolute or supreme remedy.

उपसर्गः Portent, natural phenomenon foreboding evil. (used figuratively.)

ओजायते ओज् v. i., 10th. Conj. Ubh.—to be strong or able.—Shows mettle.

बुस (n.) Chaff.

शूर्प (m. and n.) a winnowing basket.

मे प्रत्यनन्तरीभव Keep close to me.

अतिथिजनवञ्चना etc. It is a popular belief that a learned man jealously with-holding his knowledge from the world, does not find peace in death, but hovers about as a Brahma Rākshasa with a strong tendency to drag into intellectual controversies other learned men and to molest them in case of their inability to stand the tests. Here, by an extended analogy the belief is applied to the case of a parsimonious hoarder of wealth.

परापतिष्यसि Shall return or go back.

तुच्छ Trifling; worthless.

आत्तगन्ध Humiliated; defeated.

15. लौकिकी गाथा Popular verse.

भक्त (n.) Cooked food.

## SELECT OPINIONS

### On LAGHU RAMACHARITAM

(Approved by the Text-Book Committee, Madras, *vide Gazette,* 8th May, 1928, Part I-B, p. 232.)

It gives the immortal story of the Ramayana in about 400 verses of the anushtup metre.

It aims......at telling the story of the Ramayana as far as possible in the words of the original itself...... One meets again and again in these verses those jewelled phrases and those infinitly suggestive similies which are among Valmiki's principal glories......

The author has a clear eye for essentials and a natural gift for narrative.—*The Hindu.*

......The beginner is afforded the delight of tasting the great classic itself in a digestible......form instead of his being made to labour with mediocre compositions.—*The Swarajya.*

It is meant for students but will repay perusal by older persons also. It is in a simple and limpid and attractive style and weaves into the author's fine verse some of the most enchanting verses in the original............ —*K. S. Ramaswami Sastrigal.*

The author's mastery of verse and style is without flaw..........the interest of the story is not sacrificed to considerations of abridgment. This little book is well-suited to the needs of young boys learning Samskrit. —*New India.*

......in charmingly simple verses......will be of the highest use for rapid reading in the Matriculation class where the students require to be introduced to Sanskrit both simple and idiomatic.—*The Progress of Education, Poona.*

......condensed an epic......in a simple narrative form......in verses flowing and unadorned......

This attempt to offer younger minds a foretaste of the beauties of the Ramayana is praise-worthy.—*The Journal of Oriental Research.*

---

on SAMSKRITA PATHAVALI:

(Approved by the Text-Book Committee, Madras, *vide Gazette*, 19th November, 1929, Part I-B, p. 613.)

I find the author has exercised sound judgment in the choice and arrangement of the subjects and the lessons. The language......is readable and idiomatic........a suitable and useful text-book for the III, IV and V Forms...——*Mahamahopadhyaya S. Kuppuswami Sastri in his Foreword.*

This excellent Samskit Reader is intended for use in the higher forms of our High Schools...... Prose lessons and poems and songs alternate and make the Reader interesting reading. Mr. Y. Mahalinga Sastri is a gifted Sanskrit poet....he has kept in view the need for lessons of graded difficulty........this Reader is calculated to elevate the morals, widen the mental outlook and improve the powers of expression of the students.—*The Hindu.*

It consists of excellent pieces in Samskrit and will prove to be an admirable text-book in High School classes.—*K. S. Ramaswami Sastri.*

All the lessons are written in easy, flowing and idiomatic Samskrit. They also display variety of both form and matter......the boys can read its interesting matter with much advantage.—*The Progress of Education, Poona.*

......a book which was a long-felt necessity. The author should be congratulated particularly on the judgment he has shown in selecting the pieces, which are at once delightful and instructive and in arranging them in the order of difficulty. His intelligent adaptation of a few familiar English poems and stories and abridgments of portions from well-known Samskrit classics tend to enhance the utility of the Reader......the Reader is the best of its kind.—*The Journal of Oriental Research, Madras.*

## On BHASA KATHA SARA:

......commands a prose style which is at once limpid, copious and vivid and admirably in tune with the genius of his author.—*The Hindu.*

He commands a prose style which is free from......heavy compounds, ............and which is at once graceful and vigorous, idiomatic and musical.........

......is an excellent and useful addition to Sanskrit Prose literature. —*The Swarajya.*

There is a wide gap between the plain style of......Panchatantra and the......ornate diction of Kadambari...... Mr. Mahalinga Sastri is to be congratulated on his having succeded to an eminent degree in writing a prose which while being free from artificiality, is clear, natural and idiomatic........ The plots of these dramas are of entrancing interest and they are retold by Mr. Mahalinga Sastri with a narrative skill worthy of them. These stories, indeed, furnish an excellent model of Sanskrit prose. —*The New India.*

The two volumes remind one of the similar production of Charles Lamb with reference to the dramas of Shakespeare.—*The Journal of Oriental Research.*

Such a work as Mr. Mahalinga Sastri's excellent brochure is one of the means of summation of the past culture of India for the purpose of inaugurating the greater culture of the future.—*K. S. Ramaswami Sastri.*

Lovers of Sanskrit will find their labour amply rewarded if they turn over the pages and get themselves acquainted with the pristine beauty of Sanskrit dramaturgy and classical style.—*The Progress of Education, Poona.*

......They are akin to Lamb's "Tales from Shakespeare" not only in their object, but also in the fact that they attempt to preserve the flavour of the original by retaining Bhasa's characteristic expressions and here and there his slokas. We hope that these books......will find their way into Samskrit Schools and the translation classes of Colleges.--*Triveni.*

## WORKS BY MAHALINGA SASTRI.

लघुरामचरितम्

The Rāmāyaṇa for Beginners in Vālmīki's own verses (pp. 48) ... ... 0 6 0

संस्कृतपाठावलिः

A Sanskrit Reader containing 18 lessons—Prose, Poetry and Song ; With a Foreword by Mahamahopadhyaya S. Kuppuswami Sastri, Avl., M.A., I.E.S. (pp. 54)... 0 8 0

*(The above two books have been approved by the Text-Book Committee of Madras for School use).*

भासकथासारः

A prose work in two volumes containing abridged narrations of the stories of the thirteen plays of Trivandrum attributed to Bhāsa; With Preface and Glossary—

Vol. I (containing the Bhāgavata, Mahā Bhārata and Rāmāyaṇa Stories) (pp. 80) ... 0 8 0

Vol, II (containing the Vatsarāja, Avimāraka and Cārudatta Stories) (pp. 60) ... 0 8 0

कौण्डिन्यप्रहसनम्

A comic play in two Acts, With Preface and Notes. 0 8 0

शम्भुचर्योपदेशः

An adaptation in Anuṣṭup verses of Mr. K. S. Venkataramani's "A day with Sambhu" (*in the Press*) 0 4 0

*Copies can be had of the author*

*or*

**PANDIT YEJNASWAMI SASTRIGAL,**
DABIR NEW STREET,
**KUMBAKONAM.**

THE M. L. J. PRESS, MYLAPORE, MADRAS.